व्यक्तिः' इत्युक्तमितीदमपि तत्रैव द्रष्टव्यम् । अञन्तं यद् बहुष्वित्यपि चाश्रीयमाणेऽत्र लुगप्रसङ्गो भाष्येऽभिहितः । तथाहि—'यञञोश्च' (२ ४-६४) इत्यत्र 'यस्कादिभ्यो गोत्रे' (२-४-६३) इत्यतो गोत्रग्रहणानुवृत्तेर्लौकिकस्य चापत्यलक्षणस्य तत्र गोत्रस्य ग्रहणादञन्तं यद् बहुषु गोत्रमित्याश्रयणात् प्रतिकृतिबहुत्वस्य गोत्रबहुत्वाभावाल्लुगविषयोऽयम् । इत्थं च कृत्वा बैदस्य बैदयोर्वा अपत्यानि बहूनि बिदा इत्यत्राप्यञन्तस्य गोत्रबहुत्वे वर्तमानत्वादनेनैव लुक् सिद्ध इति एकवचनद्विवचनान्तस्य च प्रवृत्तौ यूनीत्येतदनारब्धव्यमिति भाष्ये सिद्धान्तोऽवस्थापितः । लौकिकस्य हि गोत्रस्य 'यञञोश्च' (२-४-६४) इत्यत्र ग्रहणाद् युवापि गोत्रमिति । गतमेतत् ॥ ६०५ ॥

इदानीमुपमानप्रसङ्गेन 'समासाच्च तद्विषयात्' (५-३-१०६) इत्ययमिवार्थविषयश्छविधिर्विचार्यते । तत्र 'तदित्यनेन किं प्रतिनिर्दिश्यत' इति भाष्यम् । सर्वनाम्ना प्रधानपरामर्श समुचित.[1] । समासश्चात्राप्रधानं, प्रत्ययप्रकृतित्वेन गुणभावादिवार्थोऽपि छविधौ गुणभावादप्रधान इत्यन्यस्यासम्भवात् कस्य परामर्श इति प्रश्नः । अत्रोत्तरं छप्रत्यय इति । स एव हि विधेयत्वात् प्रधानं सर्वनामसम्बन्धयोग्य इत्याशय । अनन्तरमुक्तं—'कथं समासो नाम छविषय स्यादि'ति । भवेत् प्राधान्याच्छप्रत्ययस्य परामर्शः, किन्त्वर्थस्यासङ्गति । तथाहि छप्रत्ययो विषयो यस्य तस्मात् समासाच्छप्रत्ययो भवतीत्यर्थ सम्पद्यते । समासस्य कथं छप्रत्ययो विषय स्यात् । न हि शब्द शब्दस्य विषयो भवति । अर्थ एव हि शब्दस्याभिधेयो विषयो न्याय्यः । शब्दस्त्वनुकरणस्य प्रत्याय्यो भवेद् विषय । न च समासश्छस्यानुकरणं[2], छ एव हि यथा स्यात् । अथात्रायमाशयः—अनन्यत्रभावो विषयार्थ इति छप्रत्ययादन्यत्र यस्य समासस्याभावः, स छविषय समास इति । एतदयुक्तमित्याह—

**छापेक्षा तद्विषयता विधेयत्वान्न गम्यते ।**
**काकतालीयमित्यत्र प्रसिद्धं ह्युपलक्षणम् ॥ ६०६ ॥**

यः समासश्छप्रत्ययादन्यत्र न भवति, ततश्छो भवतीत्येवं छप्रत्ययापेक्षं समासस्य तद्विषयत्वं न घटते । काकतालीयमित्यत्र व्युत्पाद्यते । यस्माद् यन्निर्ज्ञातं, तदन्यस्य ज्ञप्तिहेतुरुपपद्यते । छप्रत्ययोऽनेनैवेदम्प्रथमतया विधेय इत्यप्रसिद्धममुमुपाश्रित्य विशेषणं कथमेतद्विषयतया प्रकृतिभूतः समासोऽवच्छेत्तुं पार्यते । यदि हि छप्रत्ययो लक्षणान्तरेण लब्धात्मरूपो भवेत्, तदा तत्र नियतत्वं प्रकृतेः समासस्यावधार्य प्रत्ययविध्यर्थमुपादानं युज्यते । न तु लक्षणान्तरेण छो विहितः । इदमेव ह्युत्पत्तिवाक्यमस्य । तथाच प्राक् छविधेः समासस्य छविषयत्वमसिद्धं कथमनूद्यते । अथ भाव्यवस्थाश्रयेण छविषयत्वं[3] समर्थ्यते, तदा

1 'नामित्य', २ 'स छस्या' ङ. पाठः ३ 'ये य' ग. पाठः

किमनेनोक्तेन [illegible] समासाच्छो विधास्यते, स चेच्छविषयो भवति, तस्मा-च्छप्रत्ययो [illegible] विज्ञायमाने न कश्चित् प्रकृतेरुपकारोऽभिहितो भवति । छप्रकृतेः समा[illegible]गादन्यस्य निवर्तनीयस्य सिद्धस्याभावात् ॥ ६०६ ॥

ननु च [illegible] विशेषणस्यास्ति प्रयोजनम् । तथाहि — छविषयत्वेन समासस्य विशेषणे [illegible]र्थस्यानन्यत्रभावरूपत्वाच्छप्रत्ययादन्यत्राप्रयोगः समासस्यास्य स्यापितो भवति [illegible]

राजाश्वादिष विषयः स्यादन्यो वेत्यनिश्चितम् ।
तेन छस्य विधानात् प्राग् व्यपदेशो न विद्यते ॥ ६०७ ॥

[illegible] छविषयः समासोऽविशेषेणोपादीयमानः सर्वो राजा-श्वादि प्रसिद्धो [illegible] छप्रकृतित्वादेव छविषयोऽन्यो वा प्रकारान्तरेण [illegible] गृह्येतेत्येतावन्नावधारितम् । येन प्रसिद्धस्य निश्चितच्छ-विषयत्वप्रणालिकया साधुत्वं ज्ञाप्येत । समासस्य प्रकारान्तरेण हि छविषयत्वानु-पपत्तेश्छप्रत्ययप्रकृति[illegible] समासस्य तद्विषयत्वम् । इत्थञ्च सर्वस्यैव समासस्य प्रकृति[illegible] व्यवच्छिद्येत । न च सर्वस्य समासस्य छप्रत्ययादन्यत्र[illegible] ज्ञाप्यते । अनिष्टेः । न चानिष्टार्था शास्त्रप्रक्लृप्ति-र्न्याय्या । [illegible] कल्प्यताम् । तस्माच्छविधेः पूर्वं नियतस्य समासस्य [illegible]स्याभावाच्छविषयादिति विशेषणं न युक्तम् । सिद्धे हि प्रत्यये कार्यान्तरे तेन विशेषणं प्रकृतिरूपस्य दृष्टम् । तद्यथा— 'षष्ठ्यतसर्थप्रत्ययेन (२-३-३०) इति । न तु स्वयमलब्धात्मलाभः स्वनिमित्तस्यैव विशेषणं युक्तम् । [illegible]हेतुः सिद्धे ह्यर्थे ज्ञापको भवति । तदेवं प्रधानप्रत्यवमर्श[illegible] छविधौ निमित्तभूतः प्रत्ययार्थो गुणभूतोऽपि प्रत्यवमृश्यते इवार्थः । सोऽपि ह्यत्र प्रकृतत्वात् संनिहित इत्युक्तम् । एवं तर्हि इवार्थः प्रतिनिर्दिश्यत इति इवार्थश्चात्र प्रत्ययवाच्य इति कथं प्रकृतिभूतः समासस्तद्विषयः स्यादिति [illegible]प्रत्यवमर्शसामर्थ्यादिवार्थस्यात्र द्वौ व्यापारौ सम्पद्येते । तेनैकेन व्यापारेणेवार्थः समासस्यावच्छेदकोऽपरेण प्रत्ययवाच्यो जायते । इवार्थविषयात् समासादिवार्थे छ इत्यर्थः । अत्रैतमभिप्रायं बुद्ध्वा चोदि-तम् — 'समासेनोक्तार्थत्वात् तद्धितो न प्राप्नोती'ति । एकस्यैवार्थस्य

१. 'द्यते । न' घ. पाठः. २. 'नानि' घ. पाठः. ३. 'बस्वींदि' ङ. पाठः. ४. 'प्रत्य' ग. घ. पाठः.

व्यापारभेदाभावात् समासविशेषणत्वे समासवाच्यत्वाच्छप्रत्ययो न स्यात् । न ह्यभिधानमन्तरेण समासस्य विषयभावमुपगन्तुमर्हतीवार्थ इत्यर्थः । अथ वचनादभिहितेऽपीवार्थे प्रत्ययो, यथा तद्धितार्थे द्विगुरिति वचनाद् द्विगुतद्धितयोः साधारणोऽर्थः, तदा शस्त्रीश्यामादेरपि समासादिवार्थाभिधानकाच्छप्रत्ययः स्यात् । अत्र परिहारोऽभिहितो 'द्वाविवार्थावि'ति । तत्रानन्यवमर्शो यथानुपपत्त्या व्यापारभेद इवार्थस्येत्यभिप्रायः पूर्वमेव निर्णीतम् ॥ ६०७ ॥

कौ द्वावत्रेवार्थावित्याह—

**द्वयोरिवार्थयोरर्थनिमित्तत्वं प्रतीयते ।**
**एकेनावयवो युक्तः प्रत्ययोऽन्येन युज्यते ॥ ६०८ ॥**

काकतालीयम् , अजाकृपाणीयम् इत्यत्र द्वाविवार्थौ गम्येते । तयोरेकेन समासैकदेशः पूर्वपदमुत्तरपदं च सम्बद्धमिति तमिवार्थं प्रत्याययन् समासो भवतीवार्थविषयः । तद्धितान्तशब्दापेक्षया वा प्रकृतिभूतः समास एवात्रावयवः । सोऽपि च स्वावयवद्वारेणेवार्थेन युज्यते । न तु साक्षाद् अपरेणेवार्थेन वाच्येन छप्रत्ययः सम्बध्यते । शस्त्रीश्यामेत्यत्र पुनः प्रसिद्धश्यामगुणया यथा शस्त्र्या देवदत्ता उपमीयते, तथान्यापीति देवदत्ताख्येनोपमेयेनोपमानस्याप्रयोजनत्वाद् एक इवार्थः ॥ ६०८ ॥

तत्र येनेवार्थेनावयवो युज्यते, तमाह—

**चैत्रस्य तत्रागमनं काकस्यागमनं यथा ।**
**दस्योरभिनिपातस्तु तालस्य पतनं यथा ॥ ६०९ ॥**

काकतालीयमित्यत्र काकस्यागमनमुपमानं, चैत्रागमनमुपमेयम् । तथा तालपतनमुपमानं दस्युसमागमः पुनरुपमेयः । अतर्कितोपनतत्वमुभयत्रापि समानो धर्मः । तदयं समासवाच्य इत्यर्थः ॥ ६०९ ॥

प्रत्ययवाच्यमप्याह—

**संनिपाते तयोर्यान्या क्रिया तत्रोपजायते ।**
**वधादिरुपमेयेऽर्थे तया छविधिरिष्यते ॥ ६१० ॥**

काकतालयोः समागमे सति या अपरा तत्समागमनिमित्ता वधोऽङ्गभङ्गः स्फोट इत्यादिका क्रिया जायते, तया य उपमेयः परिच्छेद्यश्चैत्रदस्य्वादिलक्षणोऽर्थस्तत्रोपमानोपमेयसम्बद्धे द्वितीये इवार्थे वाच्ये सूत्रेण छप्रत्ययो विधीयते ॥ ६१० ॥

ननु च काकागमनेन तैनागमनं बाह्यमुपमीयत इति तं प्रति तस्य गुणभावः । तालपतनेन च दस्युसमागम उपमीयत इति तं प्रति तस्य गुणभावः । ततश्च काकतालयोरन्योन्यसम्बन्धाभावादसामर्थ्ये समास कथम् । अनेनैव छविधिना सापेक्षेणात्र समासो भाष्येऽवस्थापित इति चेत्, तथापि 'सुप सुपा' इत्यस्यैव व्यापारो भाष्ये दर्शित इति कथमसामर्थ्ये तत्प्रवृत्तिः । भवतु वा समासः । किन्त्वसमन्विताभ्यामवयवार्थाभ्यां समुदायार्थस्यानुपकल्पनात् कथं प्रकृत्यर्थेन प्रत्ययार्थो विशेष्येतेत्याशङ्क्याह —

**क्रियायां समवेतायां द्रव्यशब्दोऽवतिष्ठते ।**
**पातागमनयोः काकतालशब्दौ तथा स्थितौ ॥ ६११ ॥**

दध्योदनो गुडधाना इत्यादौ यथा द्रव्याणां सिद्धस्वभावानां परस्परसम्बन्धाभावात् तदन्यथानुपपत्त्योपसेकादिक्रियायामात्माश्रितायां द्रव्यशब्दो द्रव्याभिधायी, एवमत्र काकतालशब्दौ स्वसमवेते व्यापारे वर्तेते । ततश्च काकागमनं काकशब्दवाच्यं, तालपतनं तालशब्दवाच्यमित्यस्ति परस्परमभिसम्बन्धः । प्रतिपादिता च ब्राह्मणवदधीत इत्यादौ ब्राह्मणादेरन्यत्र द्रव्यशब्दस्यापि क्रियायां वृत्तिविषये वृत्तिः । ततश्चायमत्रार्थः — काकागमनमिवातर्कितोपसम्प्राप्तमिदं तालपतनं, तालपतनमिव चातर्कितोपसम्प्राप्तमिदं काकागमनमिति परस्परोपमानेन पूर्वोत्तरपदार्थयोः सामान्यवाचिनो प्रत्ययार्थविशेषणतोपपत्तिः । काकागमनतालपतनयोर्हि समन्वयोपपत्तौ सत्यां देवदत्तागमनदस्युप्रनिपातयोरुपमेयत्वात् तत्रैवार्थे वाच्ये समासोपपत्तेः तद्वद् देवदत्तवधे उपमेये छप्रत्ययप्रवृत्तिः ॥ ६११ ॥

ननु यथाक्रम एवानयोरुपमानेन तालकृतेन काकागमनादिना देवदत्तवधादिर्दस्युकृत किमिति नोपमीयते । तथाहि काकागमनतालपतनयोर्गौण्या वृत्त्या काकतालशब्दयोरत्र वृत्तिः परिकल्पितेदं नोपयुज्यत इति किं काकागमनतालपतनयोरन्योन्योपमानेनेत्यत आह —

**यदन्वाख्यायकं वाक्यं तदेवं परिकल्प्यते ।**
**प्रयोगवाक्यं यल्लोके तदेवं न प्रयुज्यते ॥ ६१२ ॥**

इह प्रकृतिप्रत्ययविभागवशेनान्वाख्यानमिति प्रक्रियावाक्यमनेन प्रकारेण समन्वितार्थपदं सम्पाद्यते । काकागमनमिव तालपतनं तालपतनमिव काकागमनमित्यन्योन्योपमानेन हि प्रक्रियायाम् अन्वाख्यानोपायभूतमिदं वाक्यं, न त्वेतल्लोके प्रयुज्यते । अन्यथा वधेनैव तालकर्तृकेण काकः सम्बध्येत, न तालेन, यदि नेदमुपरच्येत प्रक्रियावाक्यम् । स्थितलक्षणार्थप्रत्यायकं तु प्रयोगवाक्यं लौकिकं नैवम्भूतम् । नहि छप्रत्ययमन्तरेण काकतालशब्दो वाक्यस्वभावो लोके प्रयु-

१. 'भेन', २. 'यत्र', ३ 'क्प', ४. 'त, य' घ. पाठः.

च्यते । केवलं काकतालीयमित्यस्य लौकिकस्य शब्दस्यान्वाख्यानोपायपरिकल्पनेयम् । यथासमन्वयं हि परिकल्पनमित्यनुगुणतरोऽयमुपायः ॥ ६१२ ॥

तदाह—

**ययोरतर्किता प्राप्तिर्दृश्यते काकतालवत् ।**
**तयोः समासप्रकृतेर्वृत्तिरभ्युपगम्यते ॥ ६१३ ॥**

यथा काकतालयोरनाशङ्कितोपस्थितयोर्वधादिनिमित्तः सम्बन्धस्तथा ययोर्दस्युदेवदत्तयोर्दृश्यते, तयोः सम्बन्धोपाधिकयोस्तत्समागम इववाच्ये समासलक्षणा या प्रकृतिस्तस्याः सकाशाच्छस्य प्रत्ययस्य वृत्तिः प्रतिज्ञायते । तदेवं काकतालद्वयसम्बन्धोपाधिः प्रकृत्यर्थो विभज्यते । उपमेये तु वधादौ छप्रत्ययः तद्विषयैव च नियमेनेयं प्रकृतिरित्यन्यत्रास्याः साधुत्वाभावः । इदमेव च वस्तु भाष्ये विस्तरेण प्रदर्शितम् ॥ ६१३ ॥

कस्मिन्नर्थे वृत्तिरभ्युपगम्यत इत्याह—

**काकस्य तालेन यथा वधो यस्य तु दस्युना ।**
**तत्र चित्रीकृतेऽन्यस्मिन्नुपमेये छ इष्यते ॥ ६१४ ॥**

काकतालसमागमसमो दस्युदेवदत्तसमागम एकः समासार्थ इवार्थः पूर्वं दर्शितः । अयं त्वपरः प्रत्ययवाच्योऽत्र प्रदर्श्यते यदिहान्यस्मिन्निति । यथा यदृच्छयोपरि निपतता तालेन यदृच्छागतस्य काकस्य वधो वृत्तस्तथाशङ्कितोपनिपतता दस्युना असम्प्रधारितोपस्थितस्य देवदत्तस्य वध इत्यसदृशतरूपतां प्राप्ते परिच्छेद्येऽर्थे छप्रत्ययः । काकतालसम्प्राप्तिनिमित्तोपजनितक्रियाविशेषोपमितेऽन्यस्मिन् क्रियाविशेषे छविधिरित्यर्थः । तेन यथा तालेन काको यदृच्छया हतस्तथा यदपरमसमीहितमाश्चर्यभूतं जायते, तत् काकतालीयमुच्यत इत्यर्थः । गतमेतत् ॥ ६१४ ॥

उपमानप्रसङ्गेनेवार्थप्रस्तावाच्छान्दिवदन्यदप्यत्र विचार्यते । तथाहि— 'स्थूलादिभ्यः प्रकारवचने कन् (५-४-३) इत्यत्र सादृश्यं प्रकारोऽर्थः । तत्र 'चञ्चद्बृहतोरुपसङ्ख्यानम्' इत्युक्तम् । चञ्चत्सदृशश्चञ्चत्का बृहत्क. । कस्यैतदभिधानमित्याह —

**चञ्चत्प्रकारश्चञ्चत्को बृहत्क इति चापरे ।**
**मणिमण्डूकखद्योतान् सादृश्येन प्रचक्षते ॥ ६१५ ॥**

प्रकारोऽत्र सादृश्यमिति चञ्चत्प्रकारो बृहत्प्रकारश्चञ्चत्को बृहत्क इति मणिप्रभृतीनामन्यतमस्याभिधानमाचार्या मन्यन्ते । अपर इत्याचार्याणामभिन्नमतानां निर्देशः ॥ ६१५ ॥

१. 'च' ग. घ पाठ.

कीदृशमत्र मण्यादि चञ्चत्कमित्याह—

तत्रोन्मेषनिमेषाभ्यां स्वयं य उपनीयते ।
स्वास्थ्यबन्धेऽप्यस्पृष्टः स चञ्चत्प्रभो मणिः ॥ ६१६ ॥

अनवस्थितो मणिः परितः प्रभाच्छुरितः चलन्निवावधार्यमाणश्चञ्चत्कशब्द-वाच्यः । तथाहि— चञ्चमो मीलननिमीलनक्रियाभेदाद् स्पन्दमान इव लक्ष्यते । तथानवरतप्रवृत्तश्वासोच्छ्वासप्रसरोच्छूनशरीरतया चलितशरीर इवावधार्यमाणो भेकाभिधानविषयभावमुपैति । एवमविच्छिन्नोद्गमदीप्यमानरश्मिचक्रवालचलित-मूर्तिरिव मणिश्चञ्चत्कः ॥ ६१६ ॥

बृहत्के कः प्रकारार्थ इत्याह—

प्रविकासिप्रभोऽल्पोऽपि महान् य उपलभ्यते ।
बृहत्क इति तत्रैव मणौ शब्दः प्रयुज्यते ॥ ६१७ ॥

परिकृशोऽपि मणिः सर्वतः प्रसर्पिप्रभाजालवशेन स्थूलतरमूर्तिरवधार्य-माणो बृहत्सदृशो बृहत्क इत्यभिधीयते ॥ ६१७ ॥

प्रसङ्गेन प्रकारस्वरूपं दर्शनभेदेन विचारयति—

सादृश्यमेव सर्वत्र प्रकारः कैश्चिदिष्यते ।
भेदोऽपि तु प्रकाराख्यः कैश्चिदभ्युपगम्यते ॥ ६१८ ॥

'प्रकारवचने थाल्' (५-३-२३) 'प्रकारे गुणवचनस्य' (८-१-१२) 'स्थूलादिभ्यः प्रकारवचने कन्' (५-४-३) इत्यादौ सर्वत्र शास्त्रे सादृश्यमेव प्रकारशब्दार्थः । तथाहि— यथा तथेति तुल्यत्वमेव द्योत्यते । पटुजातीय इति तु जातीयरा सदृशः प्राधान्येनाभिधीयते । पटुपटुरिति द्विर्वचनेन सादृश्यमेव तद्वति गुणभूतं द्योत्यते । एवं स्थूलप्रकारः स्थूलक इति । कैश्चित् तु भेदेऽपि प्रकाराख्येष्यते । अत्रापि सर्वत्रेति यथा तथेति भेद एव वाच्यः । स एव समानः सादृश्यहेतु-रिति तदप्यर्थाद् गम्यते । एवं पटुपटुः स्थूलक इत्यत्रापि । इत्थञ्च भेदसादृश्ययोः सर्वत्र प्रतीतावेकोऽभिधेयोऽपरः सामर्थ्यगम्य इति मतभेदेन प्रकारो विभज्यते । पशुप्रकारो देवदत्त इत्यत्र सामान्यविशेषभावायोगात् सामान्यमेव प्रकारः । तद्धर्मादपि पशुर्देवदत्त इत्यभेदाभिधानात् कार्यात् तद्धेतु सादृश्यमेव गम्यते । न तु प्रयोगद्वयेऽप्यत्र भेदोऽवसीयते । ब्राह्मणप्रकारा माठरादय इति तु सामान्यस्य विशेषेऽन्वयाद् भेदेनाप्रतीतौ सादृश्यासम्भवे भेदः प्रकार इत्याहुः ॥ ६१८ ॥

अस्तु सादृश्यं भेदो वा प्रकारः । इदं तु विचार्यते—'किंसर्वनामबहुभ्य प्रकारवचने विधीयमानस्थाल् प्रातिपदिकसामान्याद् विहितस्य जातीयरो बाधकः । तथाच किञ्जातीय इति न सिध्येत् । प्रकारस्य च पाठेनाभिव्यक्तौ तथाजातीय इति कथं प्रयोग इत्यत आह—

**प्रकारवचनः कश्चित् प्रकारवति संस्थितः ।**
**प्रकारमात्रे वर्तित्वा कश्चित् तद् व्यतिवर्तते ॥ ६१९ ॥**

कश्चिदिति जातीयर् कश्च प्रत्ययो द्विर्वचनं च । अत्र हि[1] प्रत्यये स्वभावाद् गुणभूतस्य प्रकारस्याभिधानमिति प्रकारवानेव प्राधान्येनोच्यते । अत एवं-प्रकार उच्यते यस्मिन् स प्रकारवचनस्तस्मिन् प्रातिपदिकादयं प्रत्यय इति प्रकारवति भवति । थाल् पुनः प्रकारमात्र एव, न तद्वति । किन्तु प्रकारे वृत्तिमनुभूय तद्वति जातीयर्सहितो वर्तत इति सामर्थ्यादवसेयम् । न तु शुक्लादिवत् तद्वति वृत्तिस्थालन्तस्येह दृश्यते । एवञ्च भिन्नविषयत्वाद् बाध्यबाधकभावश्च न भवति । तथाजातीय इति च प्रयोगो भवति । यथा देवदत्तस्तथा यज्ञदत्त इत्यत्रापि न थालन्त एव प्रकारवन्तमभिधत्ते, अपि तु क्रियापेक्षायां वाक्यस्यास्य परिसमाप्तेर्वर्तते दृश्यते वेत्यादिका यासावपेक्षिता क्रिया, तत्र करणभावमापन्नः प्रकार एव प्रतीयते । येन प्रकारेण देवदत्तो वर्तते, तेन प्रकारेण यज्ञदत्तोऽपीत्यर्थः । अतश्च क्रियया संबध्यमानः करणतयात्र प्रकारः प्रकारवति षष्ठीनिमित्तं व्यतिरेकं नापादयति । न तु तद्वदभिधानं षष्ठ्यभावादनुमेयम्, अन्यथासिद्धेः षष्ठ्यभावस्य ॥ ६१९ ॥

यदि तर्हि थाल् सादृश्यं प्रकारार्थस्तदा यथार्थेऽव्ययीभावमुक्त्वा किमर्थं पुनः सादृश्येऽन्वाख्यायत इत्याह—

**सादृश्यग्रहणं सूत्रे सदृशस्योपलक्षणम् ।**
**तुल्ययोरव्ययीभावे सहशब्दोऽभिधायकः ॥ ६२० ॥**
**वीप्सासादृश्ययोर्वृत्तिर्या यथार्थाभिधायिनः ।**
**स चायमव्ययीभावे भेदो भेदेन दर्शितः ॥ ६२१ ॥**

'अव्ययं विभक्ति—'(२-१-६) इत्यादौ सूत्रे सादृश्यग्रहणेन धर्मी सदृशो लक्ष्यते । धर्मो ह्यव्यभिचारात् स्वाश्रयमुपलक्षयितुं पर्याप्त एव । तथाच सदृशः किख्या सकिखि इति सदृशयोरव्ययीभावे सहशब्दो वाचको न सादृश्यमात्रस्येति सामर्थ्यादत्र सूत्रे धर्मिणो धर्मः सदृशस्योपलक्षणम् । वृत्तिकारैर्हि

---

1. 'हि स्वभावे प्र' इ पाठः.

पूर्वैरुदाहरणमिदमनोक्तमिति तदाश्रयेण सहशब्दोऽभिधायको वाचकः सदृशाख्यस्य धर्मिण उच्यते । एवञ्च यदव्ययमभिधायकं सदृशार्थस्य, तस्य सादृश्यग्रहणेन समासः कथ्यते । सत्त्वभूतार्थाभिधायित्वेऽपि चास्य वचनाद् 'अव्ययीभावश्च' (१-१-४१) इत्यस्माद्व्ययत्वं, यथा स्वरादीनाम् । यत् पुनरव्ययं यथार्थाभिधायि सामान्यभाक्त्वेन निर्दिष्टं, तस्य वीप्सायां सादृश्ये च वृत्तिर्धर्ममात्रे न धर्मिणि । प्रत्ययेन् अनुरूपमिति । 'यथासादृश्ये' (२-१-७)इति प्रतिषेधाद् यथाशब्दः सादृश्यवचनो न समस्यते । थाल्प्रतिरूपको वा यथाशब्दो वीप्सावचनो निपातः समस्यत एव । वीप्सा च यथार्थो भेदः । तथाहि प्रत्यर्थमित्यत्रार्थसामान्यस्य क्रियाया[1] व्याप्यमानताविशेषः प्रतिना प्रकाश्यत इति साकल्येन पदार्थानां क्रियया समन्वयो वीप्सासामान्यस्य भेदको विशेषः प्रकारो भवति यथार्थः । तदेवं यथार्थे सादृश्यमात्रेऽव्ययीभावः स्यादिति तद्वति सादृश्यग्रहणेन पुनर्विधीयत इत्ययं विशेषः पृथक् प्रणयनादेव धर्मधर्मिणोरत्राभिमतः ॥ ६२०,६२१ ॥

प्रकारान्तरमत्रेवाह —

सादृश्यं योग्यता कैश्चिदनोरभ्युपगम्यते ।
यत् तु मूर्तिगतं साम्यं तत् सहेनाभिधीयते ॥ ६२२ ॥

अनावनुशब्दविषये या योग्यता तेनानुशब्देन द्योत्या, तदेव सादृश्यं यथार्थ इति समासस्तत्र । अनुरूपं सुरूपो वहतीति । रूपेण तुल्यं हारकटकादिना वेषोऽन्यो वा कश्चिच्छोभातिशयहेतुत्वात् तं सुरूपो धारयतीत्यर्थः । इत्थञ्च कृत्वात्र गुणस्य रूपस्य सादृश्ये यथार्थेऽव्ययीभावः । योग्यतालक्षणो हि यथार्थः सादृश्यमात्र[2]गुणविषयः । यत्तु मूर्तिगतं वस्तुनिष्ठमवयवसंनिवेशादिना सादृश्यं द्रव्यविषयं, तत् सकिखीत्यत्र सहशब्देनाख्यायते ।[3] तथाहि सादृश्यं किख्या सकिखि न तु सदृश इति । एवं द्रव्यगतत्वेन भिन्नं सादृश्यं सूत्रे सादृश्यशब्देनोपादीयते, यथाशब्देन तु योग्यताख्यं गुणगतत्वेनेति भिन्नविषयतैव समासयोः । यदा तु योग्यता वीप्सा सादृश्यं च यथार्थ इति भेदेन निर्देशादनुरूपं सुरूपो वहतीत्यत्र सादृश्यादन्यैव योग्यतानुशब्दार्थो यद्योग्यं रूपस्य शोभाकारित्वेन यदुचितं तदनुरूपमिति, तदा पूर्व एव धर्मधर्मिभेदः पृथगुपादाने हेतुर्वाच्यः ॥ ६२२ ॥

---

१. 'क्रियाया' घ. पाठः. २. 'स्यात्मात्र', ३. 'च' ङ. पाठः.

सादृश्यमेव सर्वत्र प्रकार इति यदुक्तं, तदव्यापकम् । तथाहीत्थंभावे कमण्डलुना छात्रमित्यत्र मनुष्यतासामान्यस्य छात्रादिर्विशेष इति भेदोऽत्र प्रकारो न सादृश्यम्, अपरस्य भेदवतोऽनपेक्षणादित्येतत् समर्थयितुमाह

**इत्थंभावेऽपि सादृश्यं बुद्ध्यवस्थानिबन्धनम् ।**
**ग्रहणे भेदमात्रस्य तत्रान्यैवाभिधीयते ॥ ६२३ ॥**

अङ्गदी कुण्डलीत्यादिना पूर्वमीदृशो देवदत्त इति बुद्धिप्रकल्पितसारूप्योपादानादत्रापीत्थंभावे ग्रहणे प्रत्यये भेदमात्रा कथ्यते । बाह्यवस्तुन उपरागाद् भेदलेशो न तत्त्वतो भेदः । ततश्च ज्ञानानुकारो बहिरर्थस्य व्यवस्थापकत्वात् प्रकार इति सादृश्यमप्यत्र प्रकार उपपद्यते । एवं पञ्चधा भुङ्क्ते, त्रेधाधीते, इत्यादावपि 'सङ्ख्याया विधार्थे धा'(५-३-४२)इति ग्रहणनिर्भासस्य बाह्यानुकारित्वेन सादृश्यं प्रकारार्थ उपपाद्यः । सङ्कल्पितभेदसमाश्रयस्य क्रियाविशेषस्य हि निर्वर्तनमत्र ॥ ६२३ ॥

तदेतदागमोपबृंहितं शोभत इत्यागमसन्निधापितत्वमुपदर्शयन् सर्वत्र प्रकारार्थे सादृश्यमित्यत्र भाष्यकारमतं संवादकमाह—

**गौर्बाहीक इति द्वित्वे सादृश्यं प्रत्युदाहृतम् ।**
**शुक्लादौ सति निष्पन्ने बाहीको न द्विरुच्यते ॥ ६२४ ॥ इति ॥**

'प्रकारे गुणवचनस्य' (८-१-१२) इत्यत्र द्विर्वचनविधौ गुणवचनग्रहणस्य प्रत्युदाहरणम् — 'अग्निर्माणवकः गौर्बाहीक' इति भाष्येऽभिहितम् । यदि च प्रकारः सादृश्यं, तत एतदुपपद्यते । गोसादृश्याद्धि बाहीको गौः । अग्निसादृश्याच्च माणवकोऽग्निः । न तु सामान्यस्य गोत्वस्याग्नित्वस्य चायं विशेषो भेदः । तदनेन द्विर्वचनविधेरन्यत्रापि प्रकारः सादृश्यमिति सूचितं भवति । द्विर्वचनाभावेऽपि तस्यैव प्रदर्शनात् । ननु च गवादिशब्दो गुणनिमित्ताभेदाध्यवसायादेव बाहीकादौ प्रयुक्त इति कथं न गुणवचन इत्याशङ्क्याह—शुक्लादौ सति निष्पन्ने बाहीको न द्विरुच्यत इति । परिसमाप्तरूपगुणवचने शुक्लादौ प्रसिद्धे सम्भवति बाहीको बाहीकाभिधायी गोशब्दो न द्विष्प्रयुज्यत इत्यर्थः । इतिग्रन्थसमाप्तौ । शुक्लादिशब्दो हि गुणे तद्वति समारोपितगुणसम्बन्धे वर्तमानो गुणवचन एव । गोशब्दस्तु बाहीक एव तथा, न जातौ । अत एव गुणमुक्तवान् गुणचन इत्यभिधीयते । गोशब्दस्तु बाहीके वर्तमानो न गुणमुक्तवान्, पूर्वं जातौ प्रवृत्तेः । इत्थञ्च कृत्वा प्रकृत्यर्थविशेषणत्वात् सिद्धमित्युक्तम् ।

१. 'नो गु' ङ. पाठः.

द्विर्वचनकारणत्वात् प्रकृतिर्द्विर्वचनस्यात्र स्थानी कथ्यते । तदर्थो गुणवचनस्येत्यनेन विशेष्यते, न तु प्रकारार्थः । प्रकारे हि सर्व एव गुणवचनः । तथाचाह — 'प्रकारे सर्वेषां गुणवचनत्वात् सर्वेषाम्' इति । द्रव्यवाचिनामपि गवादीनां वाहीकादौ गुणनिमित्तसादृश्यवशेन प्रवृत्तेः प्रकारे गुणवचनत्वमस्त्येवेति किं विशेषणेन व्यावर्त्येत । तस्माद् गुणवचनशब्द [illegible] गुणवचनो यः शब्दो निर्ज्ञातस्तस्य प्रकारे सादृश्ये द्योत्ये द्विर्वचनमित्यस्य तात्पर्यम् इति गुणोपसर्जनद्रव्यवाचिनः शुक्लादेरेव द्विर्वचनं गुणमात्रवाचिनश्चेति शुक्लशुक्लः पटः, शुक्लशुक्लं रूपं, पटुपटुः इतीष्टं सिद्धम् । तदेवं संसर्गरूपः पदार्थो वाक्यार्थादपोद्धृत्य पदविभागपूर्वकं समीक्षित इति परिसमाप्तार्थद्वारकः पदविचार इति शुभम् ॥ ६२४ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णक-
प्रकाशे वृत्तिसमुद्देशश्चतुर्दशः ॥

समाप्तं चेदं पदकाण्डम् ।

---

**मुक्तापीड** इति प्रसिद्धिमगमत् कश्मीरदेशे नृपः
श्रीमान् ख्यातयशा बभूव नृपतेस्तस्य प्रभावानुगः ।
मन्त्री **लक्षण** इत्युदारचरितस्तस्यान्ववाये भवो
**हेलाराज** इमं प्रकाशमकरोच्छ्री**भूतिराजात्मजः** ॥ १ ॥

तमोध्वंसः सूर्यादिभिरिह कृतो यद्यपि भुवि
प्रदीपः साफल्यं क्वचिदपि तथाप्यत्र विषये ।
प्रयात्येव प्रायो जगति खलु भावाः कृतधियां
न शक्या निह्नोतुं स्फुरदभिनवस्फाररुचिराः ॥ २ ॥

निराकाङ्क्षेण वपुषा गता विश्वजनीनताम् ।
तृतीया वागवस्थेयं प्रतिष्ठामुपयात्वितः ॥ ३ ॥

त्रैलोक्यगामिनी येन त्रिकाण्डी त्रिपदीकृता ।
तस्मै समस्तविद्याश्रीकान्ताय हरये नमः ॥ ४ ॥

सूक्तिश्रियः स्फुटा एता जयन्ति जगतां गुरोः ।
हरेर्भाष्याब्धिपीयूषच्छटाच्छुरितविग्रहाः ॥ ५ ॥

समाप्तोऽयं प्रकीर्णकप्रकाशः ।

---

**शुभं भूयात्** ॥

# स्मृतवाक्याद्यनुक्रमणिका ।

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १ | ९ | 'कुत्सितादीनामर्थे—' | वार्त्तिकम् | वररुचिः |
| ,, | ९ | 'कुत्सितादि—' | ,, | ,, |
| ,, | ११ | 'सिद्धं तु येन—' | ,, | ,, |
| ,, | १७ | 'स्वार्थमभिधाय—' | भाष्यम् | पतञ्जलिः |
| ,, | २० | 'प्रियकुत्सनादिषु—' | ,, | ,, |
| २ | २२ | 'अर्थरूपम्—' | ,, | ,, |
| ,, | २६ | 'न वा वाक्यार्थवद्—' | वार्त्तिकम् | वररुचिः |
| ,, | २८ | 'प्रातिपदिकार्थमात्रे—' | ,, | ,, |
| ४ | २ | 'विशेषणविशेष्ययो—' | ,, | ,, |
| ,, | ६ | 'न वान्यतरस्य—' | ,, | ,, |
| ,, | २२ | 'कृष्णाजिनमुलूखलस्य—' | भाष्यम् | शबरः |
| ,, | २३ | 'कृष्णाजिनेन—' | ,, | ,, |
| ,, | २३ | 'कृष्णविषाणया—' | ,, | ,, |
| ७ | १५ | 'कृष्णशब्दः—' | भाष्यम् | पतञ्जलिः |
| ९ | ५ | 'तत्र व्यपदेशिवद्वचनम्—' | वार्त्तिकम् | वररुचिः |
| ,, | ६ | 'अवचनाल्लोक—' | ,, | ,, |
| ,, | ९ | 'प्रमाणविपर्यय—' | ,, | ,, |
| ,, | २५ | 'एकवर्णेषु च—' | ,, | ,, |
| १० | २० | 'समानाधिकरणेषु—' | ,, | ,, |
| ११ | २९ | 'अव्यतिरेकात्—' | ,, | ,, |
| १५ | ३ | 'अभिहितः—' | भाष्यम् | पतञ्जलिः |
| १७ | १८ | 'चार्थे द्वन्द्ववचने—' | वार्त्तिकम् | वररुचिः |
| ,, | १९ | 'सिद्धं तु युगपदधिकरणे—' | ,, | ,, |
| ,, | २८ | 'शब्दपौर्वापर्याद्—' | ,, | ,, |

| पृष्ठम् | पङ्क्तिः | उद्धृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १८ | ४ | 'कारणाद् द्रव्ये—' | वार्त्तिकम् | वररुचिः |
| ,, | ८ | 'एकेनोक्तत्वात्—' | ,, | ,, |
| ,, | १२ | 'दुःखा दुरुपपादा चेयम्' | भाष्यम् | पतञ्जलिः |
| २१ | ५ | '[illegible] च' | वार्त्तिकम् | वररुचिः |
| ,, | २२ | '[illegible] -' | भाष्यम् | पतञ्जलिः |
| २२ | १९ | 'अन्यत्र विशेषः —' | ,, | ,, |
| २३ | ५ | '[illegible] —' | वार्त्तिकम् | वररुचिः |
| ,, | [illegible] | '[illegible]' | भाष्यम् | पतञ्जलिः |
| २४ | २१ | 'न वा समाहारैकत्वात् —' | वार्त्तिकम् | वररुचिः |
| २५ | ५ | '[illegible] च —' | ,, | ,, |
| ,, | २२ | 'एकवद्वचनम् —' | ,, | ,, |
| २६ | १५ | '[illegible]' | भाष्यम् | पतञ्जलिः |
| ,, | १६ | 'वृत्तस्य वा —' | ,, | ,, |
| २८ | १४ | 'सिद्धं तु समाना—' | वार्त्तिकम् | वररुचिः |
| ,, | १५ | 'षष्ठीसमासश्च —' | ,, | ,, |
| ,, | १८ | 'नवाऽसमासे—' | ,, | ,, |
| ,, | १९ | 'युक्तार्थसम्प्रत्ययाच्च—' | ,, | ,, |
| ,, | ,, | 'सम्प्रत्ययाच्च' | ,, | ,, |
| २९ | १८ | 'परस्परव्यपेक्षां—' | ,, | ,, |
| ,, | २३ | 'सविशेषणानां—' | भाष्यम् | पतञ्जलिः |
| ३० | ,, | 'अर्थानादेशात्' | ,, | ,, |
| ३२ | २१ | 'द्वन्द्वतत्पुरुषयो—' | वार्त्तिकम् | वररुचिः |
| ,, | २२ | 'यदा वृत्तिः—' | भाष्यम् | पतञ्जलिः |
| ३४ | १२ | 'नवावयव—' | वार्त्तिकम् | वररुचिः |
| ,, | ,, | 'तस्यान्तोदात्तत्वं—' | ,, | ,, |
| ३५ | ११ | 'नवाऽनभिहितत्वात् —' | ,, | ,, |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| ३६ | ९ | 'योऽसौ कृतकटयोः—' | भाष्यम् | पतञ्जलिः |
| ३८ | ११ | 'अथ क्यजन्तस्य—' | ,, | ,, |
| ,, | २८ | 'क्रियासमभिहारे—' | ,, | ,, |
| ४० | ५ | 'सामान्यार्थे—' | वाक्यकाण्डम् | भर्तृहरिः |
| ४१ | ,, | 'शास्त्रेषु प्रक्रिया—' | ,, | ,, |
| ४२ | १९ | 'लक्ष्यलक्षणे—' | वार्त्तिकम् | वररुचिः |
| ,, | ,, | 'सैषा शिष्ट—' | ,, | ,, |
| ,, | २१ | 'नवानिष्टादर्शनात्—' | ,, | ,, |
| ४३ | १३ | 'न केवला प्रकृतिः—' | भाष्यम् | पतञ्जलिः |
| ४५ | १७ | 'अव्यतिरेकात्—' | वार्त्तिकम् | वररुचिः |
| ,, | १८ | 'दृष्टो व्यतिरेकः—' | ,, | ,, |
| ४६ | ३ | 'नागृहीतविशेषणा—' | भाष्यम् | पतञ्जलिः |
| ४८ | २४ | 'अथ ये वृत्तिं—' | ,, | ,, |
| ४९ | १० | 'एकमाहुः—' | ,, | ,, |
| ,, | १३ | 'अन्यायश्च—' | ,, | ,, |
| ,, | २१ | 'तक्षा राजकर्मणि—' | भाष्यम् | पतञ्जलिः |
| ५० | ३ | 'भिक्षुको द्वितीया—' | ,, | ,, |
| ,, | १२ | 'सङ्घातस्यैकार्थ्यात्—' | वार्त्तिकम् | वररुचिः |
| ,, | १५ | 'राजपुरुषमानय—' | भाष्यम् | पतञ्जलिः |
| ,, | १९ | 'जहदप्यसौ—' | ,, | ,, |
| ५१ | २५ | 'अथवा वृत्तौ—' | ,, | ,, |
| ५२ | १७ | 'न शब्दनिमित्तकेन—' | ,, | ,, |
| ५५ | २० | 'एकवद्भावो वक्तव्यः—' | वार्त्तिकम् | वररुचिः |
| ,, | २१ | 'एकवद्वचनं—' | ,, | ,, |
| ,, | २४ | 'एकवचनं तूत्स—' | भाष्यम् | पतञ्जलिः |
| ५७ | ७ | 'आकृत्यभिधानाद्—' | वार्त्तिकम् | वररुचिः |

| पृष्टम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| ५७ | ९ | 'जात्याख्यायां -' | वार्तिकम् | वररुचिः |
| ५८ | ६ | 'षष्ठ्यपि हि–' | भाष्यम् | पतञ्जलिः |
| ,, | ७ | वृत्तस्य ये–' | ,, | ,, |
| ,, | ११ | 'प्रागपि वृत्तेर्ये–' | ,, | ,, |
| ६० | १८ | 'अन्याभावः–' | वार्तिकम् | वररुचिः |
| ६२ | १६ | 'यत्नादीनामेकस्य –' | ,, | ,, |
| ६३ | २१ | 'द्विवचनबहुवचना–' | ,, | ,, |
| ६५ | ६ | यो वा इमा वाचं–' | भाष्यम् | पतञ्जलिः |
| ६६ | १० | 'सिद्ध तु-' | वार्तिकम् | वररुचिः |
| ६८ | ६ | 'न वा अस्त्रीपूर्वपदस्य–' | ,, | ,, |
| ७१ | १८ | 'सामान्यमपि–' | ,, | ,, |
| ७४ | ,, | 'अन्यानिरकेन–' | ,, | ,, |
| ७५ | ११ | 'रसादिभ्यः –' | ,, | ,, |
| ७६ | १५ | 'न हि तद्धितान्तं -' | भाष्यम् | पतञ्जलिः |
| ७७ | २५ | 'हरीतक्यादिषु -' | वार्तिकम् | वररुचिः |
| ७८ | १८ | 'गुणवचनानां–' | भाष्यम् | पतञ्जलिः |
| ८० | १४ | 'किमन्तात्' | ,, | ,, |
| ,, | १५ | 'द्वितीयान्तात्–' | ,, | ,, |
| ८१ | ११ | 'एवं तर्हि प्रथमान्तात्–' | ,, | ,, |
| ,, | १८ | 'यदि प्रथमान्तात्–' | ,, | ,, |
| ,, | २५ | 'तरपोक्तत्वात्–' | ,, | ,, |
| ,, | २७ | 'द्वावपि तर्हि–' | ,, | ,, |
| ,, | २९ | 'उक्तेऽपि–' | ,, | ,, |
| ८२ | ८ | 'यदि सामयिकी–' | ,, | ,, |
| ,, | १० | 'अर्थतो व्यवस्था –' | ,, | ,, |
| ,, | २० | 'यावत् काली–' | ,, | ,, |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| ८२ | २५ | 'एवं तर्हि गुणः—' | भाष्यम् | पतञ्जलिः |
| ८४ | ११ | 'यश्चैवातिशेते—' | ,, | ,, |
| ,, | १२ | 'शेतिरकर्मकः—' | ,, | ,, |
| ,, | १४ | 'अकर्मकाः—' | ,, | ,, |
| ,, | १५ | 'कर्मोपदिष्टाः—' | ,, | ,, |
| ,, | २८ | 'गुणवचनानां—' | ,, | ,, |
| ८६ | ३ | 'स्त्रीसमानाधिकरणात्—' | वार्त्तिकम् | वररुचिः |
| ८७ | ७ | 'सिद्धं तु स्त्रियाः—' | ,, | ,, |
| ,, | २८ | 'भूतमियं ब्राह्मणी—' | भाष्यम् | पतञ्जलिः |
| ८८ | ४ | 'कारणमियं ब्राह्मणी—' | ,, | ,, |
| ,, | ,, | 'आवपनमियमुष्ट्रिका—' | ,, | ,, |
| ,, | ९ | 'अथवा पुनरस्तु—' | ,, | ,, |
| ,, | १७ | 'स्त्रियामति—' | वार्त्तिकम् | वररुचिः |
| ,, | २४ | 'प्रकृतिप्रत्ययार्थौ—' | भाष्यम् | पतञ्जलिः |
| ८९ | ९ | 'चलं हि गुणवृत्तं—' | ,, | ,, |
| ,, | १७ | 'गुणस्य चाश्रयता—' | वार्त्तिकम् | वररुचिः |
| ९० | २ | 'सर्वाश्च पुनर्मूर्तयः—' | भाष्यम् | पतञ्जलिः |
| ९३ | २२ | 'भावस्य च—' | वार्त्तिकम् | वररुचिः |
| ९४ | ५ | 'स्वाभाविकत्वात्—' | ,, | ,, |
| ९६ | ७ | 'नेदं वाचनिकं—' | भाष्यम् | पतञ्जलिः |
| ९७ | २ | 'अथवाश्रयतो—' | ,, | ,, |
| ९९ | ,, | 'क्रियानुषङ्गेण—' | ,, | ,, |
| १०० | ७ | 'याभ्यां चैकं—' | ,, | ,, |
| ,, | २७ | 'पदार्थाभिधाने—' | वार्त्तिकम् | वररुचिः |
| ,, | २८ | 'नवानभिहितत्वात्—' | ,, | ,, |
| १०१ | १९ | 'भवेत् सिद्धं—' | भाष्यम् | पतञ्जलिः |

| पृष्टम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १०१ | २१ | 'नेदमुभयं ' | भाष्यम् | पतञ्जलिः |
| १०२ | १५ | 'सामान्यस्यैव —' | ,, | ,, |
| ,, | १६ | 'सामान्यमपि —' | ,, | ,, |
| १०३ | ८ | 'अथवा विभक्त्यर्थः—' | ,, | ,, |
| ,, | २२ | 'विभक्त्यर्थाभिधाने—' | वार्तिकम् | वररुचिः |
| ,, | २४ | 'सिद्धं तु यथा —' | ,, | ,, |
| १०५ | ,, | 'यदि तर्हि विभक्त्यर्थौ —' | भाष्यम् | पतञ्जलिः |
| १०६ | १३ | 'अन्यपद इत्येतावता—' | ,, | ,, |
| १०७ | २ | 'यदि तर्हि कृत्स्नः—' | ,, | ,, |
| ,, | २५ | 'लिङ्गेषु तावदुक्तं—' | ,, | ,, |
| ,, | २७ | '[illegible]—' | ,, | ,, |
| १०८ | ९ | 'अर्थतो व्यवस्था' | ,, | ,, |
| ,, | १९ | 'पदार्थाभिधाने —' | वार्तिकम् | वररुचिः |
| ,, | २० | 'नवानभिहितत्वात् —' | ,, | ,, |
| ,, | २६ | 'एतच्चात्र युक्तम्—' | भाष्यम् | पतञ्जलिः |
| ११० | ११ | 'सर्वपश्चात्पदं—' | ,, | ,, |
| ११३ | ,, | 'नवानभिहितत्वात् —' | वार्तिकम् | वररुचिः |
| ११४ | १९ | 'अर्थानादेशनात् —' | ,, | ,, |
| ,, | २६ | 'किम्प्रधानोऽयं —' | भाष्यम् | पतञ्जलिः |
| ११९ | १४ | 'तदार्थगतेर्वा' | वार्तिकम् | वररुचिः |
| १२० | २ | 'सिद्धं तु विशेषण —' | ,, | ,, |
| १२१ | २८ | 'नञिवयुक्तमन्य—' | ,, | ,, |
| १२२ | १० | 'अथवा सर्व इमे—' | भाष्यम् | पतञ्जलिः |
| ,, | १५ | 'तपःश्रुतं च—' | ,, | ,, |
| ,, | १९ | 'तैलं भुक्तं—' | ,, | ,, |
| ,, | २३ | 'तपःश्रुताभ्यां—' | ,, | ,, |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १२३ | २७ | 'अब्राह्मणमानयेत्युक्ते—' | भाष्यम् | पतञ्जलिः |
| १२५ | ५ | 'अथेह राजपुरुषं—' | " | " |
| " | ८ | 'कः पुनरसौ' | " | " |
| " | " | 'निवृत्तपदार्थकः—' | " | " |
| " | २२ | 'यदि स्वाभाविकी—' | " | " |
| " | २३ | 'अथ वाचनिकी—' | " | " |
| १२६ | २ | 'कीलप्रतिकीलवत्—' | " | " |
| " | ४ | 'समन्धकारे—' | " | " |
| " | १३ | 'यदि पुनरयं निवृत्त—' | " | " |
| " | १८ | 'एवं यथा विज्ञायेत—' | " | " |
| १२७ | ६ | 'नञिवयुक्तमन्य— | वार्त्तिकम् | वररुचिः |
| " | ८ | 'सन्देहात्— | भाष्यम् | " |
| " | २६ | 'इदं खल्वपि— | " | " |
| १२८ | ७ | 'पाठात् पर्युदासः—' | " | " |
| " | ८ | 'त्वतल्भ्यां नञ्समासः —' | " | " |
| " | ९ | 'नात्र त्वतलौ प्राप्नुतः— | " | " |
| " | २७ | 'अतोऽन्यो भावप्रत्ययः—' | " | " |
| १२९ | २ | 'किमत्र संगृहीतं—' | " | " |
| १३० | १७ | 'कथं पुनरेकस्य—' | " | " |
| " | २३ | 'प्रसज्यायं क्रियां—' | " | " |
| १३१ | १६ | 'यद्यपि तावदत्रैतत्—' | " | " |
| " | १७ | 'भवत्येवञ्जातीयकेष्वप्येकस्य —' | " | " |
| १३२ | ६ | 'तद्यथा न न एकं—' | " | " |
| " | २६ | 'वृत्तिभेदप्रयोजकं—' | योगसूत्रम् | पतञ्जलिः |
| १३५ | २९ | नञोऽस्त्यर्थानां—' | वार्त्तिकम् | वररुचिः |
| १३६ | ४ | 'यद्यन्यपदार्थप्रधानः— | भाष्यम् | पतञ्जलिः |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १३६ | १२ | 'प्राक्षादिषु—' | वार्त्तिकम् | वररुचिः |
| " | " | 'उपसर्जनाह्रस्व—' | " | " |
| १३७ | ४ | 'अव्ययसंज्ञा—' | भाष्यम् | पतञ्जलिः |
| " | १६ | 'पाठेनाव्यय—' | " | " |
| " | " | 'यश्चेहार्थोऽभिधीयते—' | " | " |
| " | २२ | 'नैद ग्राचनिकं—' | " | " |
| १३८ | १६ | 'अथवा गुणवचनानां —' | " | " |
| १४१ | १३ | 'आकृत्यभिधानाद्वैकं—' | वार्त्तिकम् | वररुचिः |
| " | १४ | 'लिङ्गवचनसिद्धिः—' | " | " |
| " | १८ | 'गुणविवक्षा—' | " | " |
| " | १९ | 'गुणवचनवद्वा—' | " | " |
| " | २२ | 'प्रख्याविशेषादाकृति—' | " | " |
| १४३ | १७ | 'तस्माच्च वैयाकरणै —' | भाष्यम् | पतञ्जलिः |
| " | २५ | 'संस्त्यानप्रसवौ—' | " | " |
| " | २९ | 'कस्य पुनः संस्त्यानं—' | " | " |
| " | ३० | 'गुणानां—' | " | " |
| १४४ | १० | 'प्रवृत्तिः खल्वपि नित्या—' | " | " |
| " | १४ | 'वर्धते यावदनेन—' | " | " |
| " | १७ | 'सर्वाश्च पुनर्मूर्तयः—' | " | " |
| १४५ | २२ | 'चितिशक्ति—' | योगसूत्रभाष्यम् | वेदव्यासः |
| १४६ | ३ | 'तत्रोभयं सर्वत्र—' | भाष्यम् | पतञ्जलिः |
| " | ५ | 'न केवला प्रकृतिः—' | " | " |
| " | ६ | 'तद्धितार्थनिर्देशे—' | वार्त्तिकम् | वररुचिः |
| १४७ | २५ | 'अथ यस्य द्रव्यं—' | भाष्यम् | पतञ्जलिः |
| १४८ | १० | 'यदि कदाचिदाकृति—' | " | " |
| १४९ | ५ | 'न ह्याकृतिपदार्थकस्य—' | " | " |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १४९ | ९ | 'कस्यचित्तु किञ्चित्—' | ,, | ,, |
| १५२ | २७ | 'लिङ्गवचनसिद्धि—' | वार्त्तिकम् | वररुचिः |
| १५४ | ५ | 'सामान्ये वृत्तस्य—' | भाष्यम् | पतञ्जलिः |
| ,, | १२ | 'अधिकरणगति —' | वार्त्तिकम् | वररुचिः |
| १५७ | १९ | 'कस्यचित्तु किञ्चित्—' | भाष्यम् | पतञ्जलिः |
| ,, | २५ | 'चोदनासु च—' | ,, | ,, |
| १५८ | २३ | 'यदि तस्यापि—' | ,, | ,, |
| ,, | २८ | 'गुणवचनवदाश्रयतो—' | ,, | ,, |
| १५९ | ६ | 'मानं हि नामानिर्ज्ञात—' | ,, | ,, |
| १६१ | २३ | '[illegible]वृत्तावेकत्वं—' | वाक्यपदीयम् | भर्तृहरिः |
| १६३ | १९ | '[illegible]—' | — | — |
| १६४ | १० | 'ईर्ष्यावशेन कलुषत्व—' | — | — |
| १६५ | २२ | 'सामान्यमाश्रितं—' | वाक्यपदीयम् | भर्तृहरिः |
| १६६ | २१ | 'यन्नात्यन्ताय—' | भाष्यम् | पतञ्जलिः |
| १६९ | ७ | 'मानं हि नामानिर्ज्ञात—' | ,, | ,, |
| ,, | ९ | 'किं यदेवोपमानं—' | ,, | ,, |
| १७० | २ | 'रूपसामान्याद्वा—' | वार्त्तिकम् | वररुचिः |
| ,, | ३ | 'तानेव शालीन्—' | भाष्यम् | पतञ्जलिः |
| ,, | ६ | 'चत्वारो ब्राह्मणाः—' | ,, | ,, |
| ,, | १३ | 'कथं हि इको नाम—' | ,, | ,, |
| १७१ | १३ | 'यदि यदेवोपमानं —' | ,, | ,, |
| १७२ | ९ | 'एवं तर्हि यत्र—' | ,, | ,, |
| ,, | १७ | 'यत्र किञ्चित् सामान्यम्—' | ,, | ,, |
| ,, | १९ | 'न चावश्यं स एव—' | ,, | ,, |
| १७५ | ८ | 'यत्र किञ्चित् सामान्यं—' | ,, | ,, |
| ,, | १३ | 'किं वक्तव्यमेतत्—' | ,, | ,, |

| पृष्ठम् | पङ्क्तिः | उद्धृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १७५ | १९ | '[illegible] सर्वनिषेध—' | भाष्यम् | पतञ्जलिः |
| १७६ | २ | 'तत्र [illegible] साध्यत्व—' | वाक्यपदीयम् | भर्तृहरिः |
| ,, | १० | 'किं पुनरिहोदाहरणं—' | भाष्यम् | पतञ्जलिः |
| ,, | २१ | '[illegible]समानाधिकरण—' | वार्त्तिकम् | वररुचिः |
| १७७ | २ | 'प्राक् कडारात्—' | भाष्यम् | पतञ्जलिः |
| ,, | ४ | 'प्राक् कडारादेका—' | ,, | ,, |
| | १५ | '[illegible] भाषी—' | ,, | ,, |
| ,, | १९ | 'उपसर्जनत्व—' | ,, | ,, |
| ,, | २१ | 'यदि सर्वोपसर्जनानि—' | ,, | ,, |
| ,, | २९ | '[illegible]—' | वार्त्तिकम् | वररुचिः |
| १७८ | ४ | 'उभयगतिरिह—' | भाष्यम् | पतञ्जलिः |
| १७९ | ९ | 'यदि पुनरुपसर्जनानि—' | | ,, |
| १८१ | २ | 'उपसर्जन[illegible]—' | ,, | ,, |
| ,, | ५ | 'एवं तर्हि शक्यमेव—' | ,, | ,, |
| ,, | ६ | 'एवमपि गुणो—' | ,, | ,, |
| ,, | १२ | 'अनिर्दिश्यमानस्यापि—' | ,, | ,, |
| ,, | २० | 'तद्यथा चन्द्रमुखी—' | ,, | ,, |
| १८२ | १४ | 'एवमपि समानाधि—' | ,, | ,, |
| ,, | १७ | 'किं हि वचनान्न—' | ,, | ,, |
| ,, | २५ | 'यद्यपि तावत्—' | ,, | ,, |
| १८३ | १२ | 'न वा अस्त्री—' | वार्त्तिकम् | वररुचिः |
| ,, | २० | 'एवं तर्हि तस्यामेव—' | भाष्यम् | पतञ्जलिः |
| १८४ | १० | 'एतच्चात्र युक्तं—' | ,, | ,, |
| १८५ | ४ | 'यदि तावदेवं—' | ,, | ,, |
| १८६ | ४ | 'तस्यामेवोभयं—' | ,, | ,, |
| ,, | ६ | 'उपमानसमासे—' | वार्त्तिकम् | वररुचिः |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| १८६ | १० | 'साधारणं—' | वार्त्तिकम् | वररुचिः |
| ,, | २० | 'गुणानामाश्रयाद्—' | वाक्यपदीयम् | भर्तृहरिः |
| १८७ | ९ | 'न चावश्यं—' | भाष्यम् | पतञ्जलिः |
| ,, | ११ | 'न वा श्याम—' | वार्त्तिकम् | वररुचिः |
| ,, | २१ | 'अथवा सामान्य—' | भाष्यम् | ,, |
| १९१ | २ | 'इदमयुक्तं वर्तते—' | पतञ्जलिः | ,, |
| ,, | २० | 'यत् तृतीया—' | ,, | ,, |
| १९५ | १७ | यदि यदेवोपमानं—' | ,, | ,, |
| ,, | २२ | 'अथान्यदुपमानं—' | ,, | ,, |
| १९७ | २७ | 'उपपदमतिङिति—' | वार्त्तिकम् | वररुचिः |
| १९८ | २ | 'क्रियाप्रतिषेधो वा—' | ,, | ,, |
| ,, | १५ | 'नैष दोषः—' | भाष्यम् | पतञ्जलिः |
| ,, | ,, | 'समुदायेषु—' | ,, | ,, |
| ,, | १७ | 'यत् तृतीया—' | ,, | ,, |
| ,, | २२ | 'सर्व एते—' | ,, | ,, |
| २०१ | २६ | 'न वै द्रव्यस्य—' | ,, | ,, |
| २०२ | ५ | 'अग्निमन्तोदात्तं—' | ,, | ,, |
| ,, | २१ | 'अत्रैवेदम्—' | ,, | ,, |
| २०४ | ४ | 'अर्थविशेष—' | ,, | ,, |
| २०८ | २० | 'सर्व एते—' | ,, | ,, |
| २१२ | २१ | 'समुदायेषु—' | ,, | ,, |
| २१३ | १२ | ,, ,, | ,, | ,, |
| ,, | १८ | 'पूर्वे पञ्चालाः— | ,, | ,, |
| ,, | १९ | 'तैलं भुक्तं—' | ,, | ,, |
| ,, | २२ | 'नेक्षिता जातिशब्दानां—' | वाक्यपदीयम् | भर्तृहरिः |
| २१५ | २७ | 'एवमयंसमुदाये—' | भाष्यम् | पतञ्जलिः |

| पुटम् | पङ्क्तिः | [illegible] | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| २१७ | १३ | 'अपि[illegible]—' | भाष्यम् | पतञ्जलिः |
| ,, | १८ | 'कथमेन [illegible]—' | ,, | ,, |
| २२० | ६ | 'सामान्यमपि' | ,, | ,, |
| २२२ | ६ | 'अस्ति तर्हि तृतीया—' | | ,, |
| ,, | २५ | 'पुमांसो [illegible]' | स्मृतिः | मनुः |
| २२३ | १० | 'अस्तु तर्हि प्रत्ययार्थे' | भाष्यम् | पतञ्जलिः |
| ,, | २७ | पुनरपि तृतीया | ,, | ,, |
| २२४ | २९ | 'नैष दोषः—' | ,, | ,, |
| २२५ | ७ | 'तुल्यया च—' | ,, | ,, |
| २२६ | २१ | 'किं पुनरत्र न्यायः' | ,, | ,, |
| २२९ | २[illegible] | 'किमर्थमिदमुच्यते' | | ,, |
| २३७ | १६ | न कश्चि[illegible]च्छेदेन | ,, | ,, |
| २३८ | २ | 'ननु च महत्यपि' | ,, | ,, |
| ,, | २५ | 'उपमानं च संशयः—' | ,, | ,, |
| २३९ | १६ | 'एवं तर्हि सिद्धे' | ,, | ,, |
| ,, | २३ | 'नित्यं परिग्रहीतव्यं—' | ,, | ,, |
| २४० | २२ | 'किमर्थमिदमुच्यते' | ,, | ,, |
| २४१ | ७ | 'तेन तुल्यमित्येव—' | ,, | ,, |
| २४२ | १३ | 'न सिध्यति—' | ,, | ,, |
| २४३ | १२ | 'चिच्छेद कृतहस्तवत्—' | महाभारतम् | व्यासः |
| ,, | १७ | 'पाण्डोर्विदुर—' | ,, | ,, |
| २४५ | २२ | 'चिच्छेदकृतहस्तवत्—' | ,, | ,, |
| २४६ | ७ | 'इन्द्र इव ह्युपस्तूयसे—' | ऋग्वेदः | ,, |
| ,, | २५ | 'रामरावणयोर्युद्धं—' | रामायणम् | वाल्मीकिः |
| २४७ | १७ | 'अङ्गदा—' | भाष्यम् | पतञ्जलिः |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| २५१ | ४ | 'अर्थग्रहणं किमर्थं—' | भाष्यम् | पतञ्जलिः |
| ,, | १० | 'शब्दे कार्यस्या—' | ,, | ,, |
| ,, | २१ | 'इदं तर्हि प्रयोजनं—' | ,, | ,, |
| २५२ | २ | 'प्रवृत्तिरेव—' | वाक्यपदीयम् | भर्तृहरिः |
| ,, | १७ | 'साधनेऽयं—' | भाष्यम् | पतञ्जलिः |
| २५३ | २० | 'एकार्थे शब्दान्यत्वाद्—' | वार्त्तिकम् | वररुचिः |
| २५४ | ५ | 'स्त्रीपुंसाभ्यां —' | ,, | ,, |
| ,, | १० | 'आचार्यप्रवृत्ति—' | भाष्यम् | पतञ्जलिः |
| २५५ | २ | 'निपातनमप्येवं—' | ,, | ,, |
| ,, | ५ | 'एवमपि स्त्रीवदिति—' | ,, | ,, |
| ,, | २५ | 'अङ्गानि जाति—' | ऋग्विदाम्नाय: | ,, |
| २५६ | २ | यत्पशुर्मायु—' | तै सं | — |
| ,, | ८ | 'कश्यपे वां सा—' | ,, | ,, |
| ,, | १५ | 'रुद्र ईवतौ—' | ,, | ,, |
| ,, | २७ | 'मा भूदेवं—' | भाष्यम् | पतञ्जलिः |
| ,, | २८ | 'नैवं शक्यम्—' | ,, | ,, |
| २५७ | ७ | 'एकवचन—' | वार्त्तिकम् | वररुचिः |
| ,, | २० | 'लिङ्गसिद्ध्यर्थं—' | ,, | ,, |
| २५८ | २५ | 'नवान्यस्यानेकत्वाद्' | ,, | ,, |
| २५९ | १० | ,, | ,, | ,, |
| २६२ | ३० | 'हरीतक्यादिषु—' | ,, | ,, |
| २६३ | १२ | 'तदित्यनेन—' | भाष्यम् | पतञ्जलिः |
| ,, | १५ | 'कथं समासो नाम—' | ,, | ,, |
| २६४ | २४ | 'एवं तर्हि इवार्थः—' | ,, | ,, |

| पृष्ठम् | पङ्क्तिः | स्मृतवाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|---|
| २६४ | २९ | 'समासेनोक्तार्थत्वात्——' | भाष्यम् | पतञ्जलिः |
| २६५ | ६ | 'द्वाविवार्थौ——' | " | " |
| २६७ | २५ | 'चन्द्रद्रुहतो——' | वार्तिकम् | वररुचिः |
| २७१ | १९ | 'अग्निर्माणवकः——' | भाष्यम् | पतञ्जलिः |
| २७२ | ४ | 'मकारे सर्वेषां——' | वार्तिकम् | वररुचिः |

